इति । इह कस्मान्न भवति । मातयति भ्रातयति । लोपोऽ×त्र बाधको भविष्यति । इदमिह संप्रधार्यम् । टिलोपः क्रियतां रभाव इति किमत्र कर्तव्यम् । परत्वाद्रभावः । यदि पुनरवशिष्टस्य रभाव उच्येत । नैवं शक्यम् । इहापि प्रसज्येत । कृतमाचष्ट कृतयतीति । एवं तर्हि परिगणनं कर्तव्यम् । पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम् ।

**प्रकृत्यैकाच् ॥ ६ । ४ । १६३ ॥**

प्रकृत्यैकाजिति किमिष्ठेमेयःस्वाहोस्विदविशेषेण । किंचाऽतः । यद्यविशेषेण स्वी खी+ शौवम्* अधुनेत्यत्रापि** प्राप्नोति । स्विखिनावेव न स्तः । कथम् । उक्तमेतदेकाक्षराकृतो जातिः सप्तम्यां च न तौ स्मृतौ÷ । स्ववान् खवानित्येव भवितव्यम् । शौवमिति परत्वादैजागमे÷* कृते टिलोपेन भवितव्यम् । अधुनेति सप्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते । इह

---

प्र०—इति स्थितम् । स्वृचीयानित्येतस्यापि परिहाराय चोद्यमुपन्यस्यति—**इह कस्मादिति । मातयतीति** । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति पक्षाश्रयणात्तुरिष्ठेमेयःस्विती-ष्ठवद्भावात्तृशब्दस्य लोपाभावः । **यदि पुनरिति** । टिलोपोऽप्यनुवर्तते ततश्चान्त्यस्य ऋशब्दस्य टिलोपोऽनन्त्यस्य तु रभाव इति मातयतीत्यादौ रादेशाभावः । **कृतयतीति** । अत्रानन्त्य ऋकारोऽस्तीति रभावप्रसङ्गः । एवं स्वृचीयानित्यत्रापि । **एवं तर्हीति** । परिगणने च सति हलादेर्लघोरिति न कर्तव्यम् ।

**प्रकृ० । किमिष्ठेमेयःस्विति** । किं प्रत्यासत्त्याश्रयेणेष्ठेमेयसोऽपेक्ष्यन्तेऽथ व्याप्त्याश्रयेण तद्धित इति प्रश्नः । **स्वीति** । स्वशब्दादिनि कृते प्रकृतिभावाद्यस्येति लोपो न प्राप्नोति । **शौवमिति** । शुनो विकारावयवयोः प्राण्यञि कृते नस्तद्धित इति टिलोपो न प्राप्नोति । **अधुनेति** । इदमोऽधुनाप्रत्यये परत इशादेशस्तस्य यस्येति लोपो न प्राप्नोति । **शौवमिति** । टिलोपं बाधित्वा परत्वाद्वृद्धिः प्राप्ता द्वारादीनां चेति प्रतिषिध्यते । ऐजागमश्च क्रियते । तत्रैकाच्त्वाभावात्प्रकृतिभावाभावः । **अधुनेति** । इदमोऽश्भा-

---

उ०—त्यत्र तुरिष्ठेमेयःस्विति प्राप्नोतीत्यत आह—**उणादय इति** । ननु लोपं बाधित्वा रभावप्रवृत्तेरुक्तत्वात्कथमवशिष्टस्य रभाव आशङ्क्यते तत्राऽऽह—**टिलोपोऽपीति** । ऋकाररूपायाष्टेर्लोपो भवतीत्युक्ते सामर्थ्यादनन्त्यस्य रभावः फलतीति भावः । तृशब्दस्यान्त्यस्य टिलोप इत्यन्वयः । तस्यैव टित्वादिति भावः । **मातयतीत्यादाविति** । अनन्त्यऋकारस्याभावादित्यर्थः । **न कर्तव्यमिति** । ऋजिष्ठकृशिष्ठादौ प्रसङ्गाभावादिति भावः ।

**प्रकृत्यै० । तद्धित इति** । नस्तद्धित इत्यतस्तदनुवृत्तेरिति भावः । **विकारावयवयोरिति** । अर्थान्तरे तु तस्येदमित्यण्यन्निति प्रकृतिभावाच्छौवनमिति भाव्यम् । संकोचे तु शुनः संकोच इत्यनेन टिलोपेन भाव्यमिति भावः । **तत्रेति** । ऐजागमे कृते पुनःप्रसङ्ग-

---

× ६. ४. १५५. + ५. २ ११५; ६ ४, १४८. * ४. ३ १५४; ६. ४. १४४.
** ५. ३. १७; ६. ४. १४८. ÷ ५. २. ११५. ÷* ७, ३, ४.

तर्हि प्राप्नोति । द्रव्यम्÷+ ।

यस्येत्यादौ प्रकृतिभावः । यस्येति*+ यस्य लोपप्राप्तिस्तस्य प्रकृतिभावो न चैतानि यस्येत्यादौ । एवमपि श्रिये हितः श्रीयः** ज्ञा देवताऽस्य स्थालीपाकस्य ज्ञः×+ स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयःसु प्रकृतिभावः।

अथेष्ठेमेयःसु प्रकृतिभावे किमुदाहरणम् । प्रेयान् प्रेष्ठः÷÷ । नैतदस्ति । प्रादीनामसिद्धत्वान्न भविष्यति । इदं तर्हि । श्रेयान् श्रेष्ठः÷++ ।

**प्रकृत्यैकाजिष्ठेमेयःसु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः ॥ १ ॥**

प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न । किं कारणम् । एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृतिभावो भविष्यति ।

---

प्र०—वोऽधुनाप्रत्ययश्च निपात्यते । **द्रव्यमिति** । द्रोर्विकारो द्रोश्चेति यत्प्रत्ययः । ओर्गुण इति गुणोऽत्र न प्राप्नोति । **यस्येत्यादाविति** । यस्येत्यादीनि कार्याण्यपेक्ष्य प्रकृतिभावो विधीयते । ओर्गुणस्तु तेभ्यः पूर्व इति प्रकृतिभावाभावः । **श्रिय हित इति** । प्राक्क्रीताच्छ इति च्छः । तत्र यस्येति लोपो न प्राप्नातीतीयङः प्रसङ्गः । **प्रादीनामिति** । असिद्धत्वादेवैकाच्त्वाभावात्प्रकृतिभावोऽप्यत्र नास्ति नापि टिलोपः । स्थान्याश्रयष्टिलोपः प्राप्नोतीति चेत् । विप्रतिषेधे तावदसिद्धत्वाभावस्य ज्ञापितत्वात्परत्वात्प्रादिषु कृतेषु तेषामसिद्धत्वेनाविद्यमानत्वान्न स्वाश्रयो नापि पराश्रयष्टिलोपः प्राप्नोत । **श्रेयानिति** । असिद्धाधिकाराद्बहिः आदिविधानादसिद्धत्वाभावः । **एकाच उच्चारण-**

उ०—विज्ञानाट्टिलोप इति भावः । भाष्ये प्रतिषेधशब्देन प्रकृतिभावोऽभिसहित इत्याह—**प्रकृतिभाव इति** । क्वचित्तु भाष्येऽपि तथैव पाठः । तत्र यस्येत्यादीत्यादिग्रहणं प्रकारार्थं लोपत्वेन च सादृश्यमत एवाग्रे न चैतानि यस्येत्यादावित्युक्तं भाष्ये । एतानीति बहुवचनं तु प्रयोगभेदेनौर्गुण इत्यस्य भेदमाश्रित्य । यस्येति यस्य लोपप्राप्तिरित्येतत् । यस्येतीत्येवमादिना यस्य लोपप्राप्तिरिति व्याख्येयम् । अत एव कनयति कनिष्ठ इत्यादावल्लोपोऽन इति लोपो न । न च तत्रोच्चारणसामर्थ्यादल्लोपाभावः। एवमपि नस्तद्धित इत्यस्याऽऽपत्तेः। उच्चारणं तु सर्वादेशत्वसंपादनेन चरितार्थम् । इनण्यनेत्यादिसाहचर्याल्लोपविषय एव प्रकृतिभावः । एतेनानन्तरत्वाट्टेरित्यस्यैवायं बाधक इति निरस्तम् । षपूर्वेति सूत्रस्थभाष्यप्रामाण्येन 'अन्' इत्यस्याल्लोपबाधकताया आवश्यकत्वेन तत्साहचर्यादर्थानुरोधाच्चैतद्विषयेऽपि न्यायाप्रवृत्तेरेवोचितत्वात् । नैकाजिति वक्तव्ये प्रकृतिग्रहणाच्च । अत एवोपक्रमे शौवमित्यत्राविशेषेणेति पक्षे नस्तद्धित इति न प्राप्नोतीति कैयटोक्तिः संगच्छते । **स्थान्याश्रय इति** । शास्त्रासिद्धत्वाश्रयणादिति भावः । **विप्रतिषेधे तावदिति** । अत्र विषये स्थानिनो निवर्तनात्स्थानिकार्याप्राप्तिरिति भावः । **न स्वाश्रय इति** । असिद्धत्वादिति भावः । **पराश्रय इति** ।

---

÷+ ४. ३. १६१; ६. ४. १४६. *+ ६. ४. १४८. ** ५. १. १; ६. ४. १४८.
×+ ४. २. २४; ६. ४. १४८. ÷÷ ६. ४. १५७. ÷++ ५. ३. ६०.

## विन्मतोस्तु लुगर्थम् ॥ २ ॥

विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः* । स्राग्वितरः स्रजीयान् । स्राग्वितमः स्रजिष्ठः । स्रुग्वत्तरः स्रुचीयान् । स्रुग्वत्तमः स्रुचिष्ठः । ननु च विन्मतोर्लुक्टिलोपं+ बाधिष्यते । कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् । असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् । यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधत एवं नस्तद्धिते [ १४४ ] इत्येतमपि बाधेत । यतरो नौ ब्रह्मीयान् । ब्रह्मवत्तर इति । यत्तावदुच्यते कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादितीदं तावदयं प्रष्टव्यः । यदि तर्हि विन्मतोर्लुग्नोच्येत किमिह स्यादिति । टिलोप इत्याह । टिलोपश्चेन्नाप्राप्ते टिलोपे विन्मतोर्लुगार-

प्र०—**सामर्थ्यादिति** । अकार उच्चारणार्थो न प्रतिज्ञातोऽपि तु श्रवणार्थः । **विन्मतोस्तु लुगर्थमिति** । लुक्यर्थो यस्य तल्लुगर्थं लुकि कृते टिलोपाभावार्थमित्यर्थः । **कथमन्यस्येति** । विन्मतुबन्तस्य टिलोपं लुग्बाधतां तस्मिंस्तु कृते यष्टिलोपः प्राप्नोति तं कथं बाधते । नहि तस्मिन्प्राप्ते लुगारभ्यत इत्यर्थः । **यथैवेति** । लुको बाधकत्वाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः । **ब्रह्मीयानिति** । अतिशयेन ब्रह्मवानितीयसुनि मतुप्लुकि च नस्तद्धित इति टिलोपः । **नाप्राप्त इति** । यद्यपि विषयभेदेन टिलोपो भिन्नस्तथाऽप्यनपेक्षितविषयभेदं टिलोपशास्त्रं येन नाप्राप्तिन्यायेन लुका बाध्यते तेन स्रजीयानित्येतस्मिन्नङ्गे सांप्रतिकी भाविनी च टिलोपप्राप्तिः पटिष्ठादौ सावकाशा लुका

उ०—तस्याभावादिति भावः । अनयोर्यौगपद्यासंभवरूपो विरोधः । आदेशे प्रियशब्दस्येष्ठाद्यानन्तर्यविघातात्, टिलोपे च प्रियशब्दस्याऽऽदेशनिमित्तानन्तर्यविघातात् । स्थानिवद्भावस्त्वादेशप्रवृत्त्युत्तरं न तत्प्रवृत्तिसमये, कृते च टिलोपे प्रादीनां चारितार्थ्यमिति वार्तिकमतेनेदं बोध्यम् । वस्तुतस्तु पूर्वप्राप्तटिलोपं बाधित्वा परत्वात्प्राद्यादेशे कृते पुनस्तन्निमित्तटिलोपः सकृद्गतिन्यायेन न भवति । आदेशनिमित्तस्त्वसिद्धत्वादेव नेति भाष्याशयः । **श्रवणार्थ इति** । न च लोपेऽपि ण्यन्ताच्चाङि अशश्रदित्यादावकारश्रवणाय तदुच्चारणं चरितार्थम् । ईदृशेऽपि विषये द्विर्वचनेऽचीत्यादेः प्रवृत्त्यभावस्य तत्रैवोपपादितत्वात् । ननु प्रकृतिभावस्य विन्मतोर्लुक् न प्रयोजनमत आह—**लुगर्थमिति** । ननु विन्मतुबन्तस्य लुक्टिलोपौ प्राप्नुत इति किमुच्यतेऽन्यस्येतीत्यत आह—**विन्मतुबन्तस्येति** । भाष्ये दोषान्तरमाह—**यथैव खल्वपीति** । तदाशयमाह—**लुक इति** । **टिलोप इति** । इष्यत इति शेषः । तथा चाऽऽरण्यके तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुर्विति प्रयोगः । **अनपेक्षितविषयभेदमिति** । तन्न्यायस्य तथैव स्वरूपादिति भावः । अनयाऽपि युक्त्या प्रेष्ठादौ टिलोपवारणं श्रेष्ठज्येष्ठादौ च । एवं भूयानित्यादौ भ्वादेशस्य गुणापवादत्वान्नाऽऽदेशस्य गुणः । असिद्धत्वाद्युक्तिस्तु भाष्ये वार्तिकमतेनैकदेशिन इति बोध्यम् । **स्रजीयानित्येतस्मिन्नङ्ग इति** । अनेनाभिन्नविषयत्वं

* ५. ३. ६५. + ६. ४. १५५.

भ्यते स बाधको भविष्यति । यदप्युच्यतेऽसति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यादिति सत्यपि संभवे बाधनं भवति । तद्यथा । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे विन्मतोर्लुक्टिलोपं बाधिष्यते । यदप्युच्यते यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधत एवं नस्तद्धित इत्येतमपि बाधेतेति न बाधते । किं कारणम् । येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते नस्तद्धित इत्येतस्मिन्पुनः प्राप्ते चाप्राप्ते च । अथवा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त इत्येवं विन्मतोर्लुक्टिलोपं बाधि-

---

प्र०—बाध्यते तत्र विन्नन्तस्य नान्तत्वान्नस्तद्धित इत्ययमपि टिलोपो लुका बाध्यते । मतोस्तु लुका नस्तद्धित इति टिलोपो न बाध्यते । ननु किमुच्यते नस्तद्धित इत्यस्मिन्पुनःप्राप्ते चाप्राप्ते चेति यावता मतोर्नान्तत्वाभावादप्राप्त एव नस्तद्धित इति टिलोपः । नैष दोषः । मतुप्प्रत्ययो नकारान्तादनकारान्ताच्च विधीयते । तत्र यद्यप्यकृते मतुब्लुकि नस्तद्धित इति टिलोपो न प्राप्नोति तथाऽपि मतुब्लुकि कृते प्राप्नोति । एकदेशविकृतं चानन्यवदिति यदेवाङ्गं ब्रह्मवदिति तदेव ब्रह्मन्विति । तदेवमभेदाश्रयेणेदमुक्तं प्राप्ते चाप्राप्ते चेति । अथवेति । ननु विन्मतोर्लुगित्येतस्य नस्तद्धित इत्ययमेव योगोऽनन्तरः, टेरित्ययं तु व्यवहितः । तत्र केचिदाहुः । पाठक्रमादर्थक्रमो बलीयानिति । टेरित्येष योगः सर्वविषयस्य व्यापनादनन्तरो भवति । यद्येवं पूर्वमेवायमर्थ उक्तो येन नाप्राप्त इति किमर्थं पुनरुच्यते । पूर्वमुत्सर्गापवादन्याय उक्त इदानीं त्वर्थक्रमप्रतिपत्त्याश्रयेणोच्यते येन हि सर्वो विषयो व्याप्तः स एव बाधितुं युक्तः । यस्तु विषयविशेषे प्रवर्तते तस्य बाधा न युक्ता । सामान्ये हि पूर्वं प्रतिपत्तिरुदेति पश्चाद्विशेषेषु । अन्ये तु न्यास भेदाश्रयेण व्याचक्षते टेरित्यस्य

---

उ०—लुग्लोपयोर्दर्शयति—**नस्तद्धित इत्ययमपीति** । फलोदाहरणमस्य चिन्त्यम् । क्व तर्हि नान्तस्य टिलोपे येन नाप्राप्तिन्यायाभाव उक्तोऽत आह—**मतोस्त्विति** । ननु कृते मतुब्लुकि शब्दान्तरस्य टिलोपः प्राप्नोति नतु मत्वन्तस्येति कथं लुको नस्तद्धित इत्यस्मिन्प्राप्त आरम्भोऽत आह—**एकदेशेति** । **तदेवमभेदेति** । नान्तमत्वन्तयोरभेदाश्रयेणेति भावः । **नन्विति** । विन्मतोरिति लुक् पञ्चमाध्यायस्थः । **अर्थक्रमः** । बुध्यारोहविषयः क्रमः । **सर्वविषयव्यापनादिति** । यद्बाधकं तस्य बहुषु बाध्येषु किं बाध्यमिति विशेषचिन्तायां येन तस्य सर्वोऽपि विषयो व्याप्तस्तद्बाधेन विनाऽस्य प्रवृत्त्ययोगात्तत्रावश्यबाधनीये तेन चारितार्थ्यादन्यबाधने मानाभाव इत्ययं न्यायोऽथवेत्यनेन दर्शित इत्यर्थः । अत्रार्थे पौनरुक्त्यं शङ्कते—**यद्येवमिति** । सर्वविषयव्यापनेन बाधकोपस्थितिकाले झटिति बुद्धिसंनिधानादनन्तरत्वमिति । अनेनापि न्यायेन तस्यैव बाध इति भाष्यार्थ इत्युत्तरम् । **टेरित्यस्य**

ष्यते । नस्तद्धित इत्येवं न बाधिष्यते । यदि तर्हि विन्मतोर्लुकिटिलोपं बाधते पयिष्ठ इति न सिध्यति पयसिष्ठ इति प्राप्नोति । यथालक्षणमप्रयुक्त इति ।

**प्रकृत्याऽके राजन्यमनुष्ययुवानः ॥ ३ ॥**

राजन्यमनुष्ययुवानोऽके प्रकृत्या भवन्तीति वक्तव्यम् । राजन्यकम्× । मानुष्यकम्× यौवनिका* ।

**न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥**

**मपूर्वात्प्रतिषेधे वा हितनाम्नः ॥ १ ॥**

मपूर्वात्प्रतिषेधे वा हितनाम्न इति वक्तव्यम् । आरोहितो वै हैतनामः । आरोहितो वै हैतनामनः । समानो हैतनामः । समानो हैतनामन इति च ।

---

प्र०–पश्चान्नस्तद्धित इति पठितव्यम् । **पयिष्ठ इति** । पयस्विन् इष्ठ इति स्थिते विनो लुकि कृतेऽसो लोपो न प्राप्नोति । **यथालक्षणमिति** । न भवति टिलोप इत्यर्थः । ततश्च रजस्विनमाचष्टे रजसयति । आयुष्मन्तमाचष्ट आयुषयतीति भवितव्यम् । **राजन्यकमिति** । समूहेऽर्थे गोत्रोक्षोष्ट्रेति वुञ् । आपत्यस्य च तद्धितेऽनातीति यलोपाभावार्थं प्रकृतिभावविधानं यस्येति लोपे सत्यसति वा विशेषाभावान्न तदर्थः प्रकृतिभावः । **यौवनिकेति** । यूनो भाव इति मनोज्ञादित्वाद्वुञ् । तत्र नस्तद्धित इति टिलोपः प्राप्तः प्रकृतिभावान्न भवति ।

**न म०। हैतनामन इति**। हितनाम्नोऽपत्यमित्यण् । अन्निति प्रकृतिभावात्पक्षे टिलोपाभावः।

---

उ०–**पश्चादिति** । इदं चिन्त्यम् । एवं न्यास ओर्गुण इत्यादौ तद्धित इत्यस्य लाभे स्थूलदूरेत्यादौ चेष्ठेमेयःस्वित्यस्य लाभे क्लेशात् । अत्र केचित् । इदं भाष्यं न सूत्रप्रत्याख्यानपरं किंतु वृत्त्याद्युक्तोदाहरणेष्वन्यथासिद्धिप्रतिपादनपरम् । अत एव कनिष्ठ इत्यादौ नस्तद्धित इति टिलोपो नेति बोध्यम् । केचित्तु कन इत्यदन्त आदेशः, सूत्रे शकन्ध्वादित्वात्पररूपमित्याहुः । तन्न । यस्येत्यादिलोपेऽवश्यं प्राप्तेऽस्याऽऽरम्भाद्विन्मतोर्लुकून्यायेन पुनस्तदनापत्तौ कनिष्ठ इत्याद्यसिद्ध्यापत्तेः । एवं नेदसाधावपि हलन्तादेव । अकारस्तूच्चारणार्थः । परे तु किमुदाहरणमिति प्रश्ने परोक्तोदाहरणानामन्यथासिद्धिं प्रदर्श्योदाहरणान्तरानुक्तेरस्योदाहरणाभाव एव । विन्मतोर्लुगिव प्रादयः श्रादयः कनादयश्च टिलोपे नाप्राप्त आरभ्यमाणास्तद्बाधका एव । कनिष्ठ इत्यादौ नस्तद्धित इति तु न । अनुच्चारणसामर्थ्यात् । सर्वादेशः केत्यादेशेनापि सिद्धः । टेरिति लोपस्य तु येन नाप्राप्तिन्यायेन कनादेशेन बाधाद-प्रवृत्तिरित्याहुः । **न भवतीति** । वस्तुतो नास्त्येवेदृशः प्रयोग इति बोध्यम् । इति **भवितव्यमिति** । यद्यभिधानमस्तीति बोध्यम् । विशेषाभावादिति । असत्यपि यस्येति लोपे पररूपेण रूपस्य सिद्धत्वादिति भावः ।

**न मपूर्वो०** । **पक्ष इति** । प्रतिषेधाभावपक्ष इत्यर्थः ।

---

× ४. २. ३९; ( ६. ४. १५१ ). * ५. १. १३२; ( ६. ४. १४४. )

**ब्राह्मोऽजातौ ॥ ६ । ४ । १७१ ॥**

अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम् । कथं च लोपार्थं स्यात्कथं वा नियमार्थम् । यदि तावदपत्य इति× वर्तते ततो नियमार्थम् । अथ निवृत्तं ततो लोपार्थम् । अत उत्तरं पठति ।

**ब्राह्मस्याजातौ लोपार्थं वचनम् ॥ १ ॥**

ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते । अपत्य इति निवृत्तम् ।

**तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ॥ २ ॥**

तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य÷ प्रतिषेधो वक्तव्यः । **ब्राह्मणः ।**

**न वा पर्युदाससामर्थ्यात् ॥ ३ ॥**

न वा वक्तव्यः । किं कारणम् । पर्युदाससामर्थ्यात्पर्युदासोऽत्र भविष्यति । अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् । या जातिरेव नापत्यम् । **ब्राह्म्योषधि-**

प्र०— **ब्राह्मो०**। ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते ब्राह्मो नारदो ब्राह्मो मुहूर्तो ब्राह्मः स्थालीपाक इति । जातौ त्वपत्ये ब्राह्मण इतीष्यते । अनपत्ये तु जातौ ब्राह्मी औषधिरिति टिलोप इष्यते । एतच्च यथाभिधानं न सिध्यतीति मत्वा पृच्छति—**अथ किमिदमिति । यदि तावदिति** । ब्रह्मणोऽपत्यमित्यण् । अल्लोपोऽन इत्यकारलोपः प्राप्तो न संयोगाद्वमन्तादिति प्रतिषिद्धः । नस्तद्धित इति टिलोपे प्राप्तेऽनिति प्रकृतिभावः प्राप्तो न मपूर्वोऽपत्येऽवर्मण इति प्रतिषिद्धस्ततष्टिलोपे प्राप्ते नियमार्थमिदमजातावेवापत्ये टिलोपो भवति ब्राह्मो नारद इति । जातौ त्वपत्ये न भवति ब्राह्मण इति । एवमपत्ये सिध्यति व्यवस्था । अनपत्ये त्वनिति प्रकृतिभावाद्ब्राह्मशब्दो न सिध्यति । **अथ निवृत्तमिति** । अपत्यग्रहणे निवृत्ते विधिनियमसंभवे विधिरेव ज्यायानित्यनपत्येऽनिति प्रकृतिभावे प्राप्तेऽजातौ टिलोपार्थं निपातनं भवति । तत्र ब्राह्मो मुहूर्तो ब्राह्मः स्थालीपाक इति सिध्यति । ब्राह्मी औषधिरिति तु न सिध्यति । अजाताविति प्रतिषेधात् । ब्राह्मणी औषधिरिति प्राप्नोति । अपत्ये जातौ ब्राह्मण इति न सिध्यति । न मपूर्वोऽपत्येऽवर्मण इति प्रकृतिभावप्रतिषेधाट्टिलोपप्रसङ्गात् । **न वेति** । वक्ष्यमाणोऽभिप्रायः । इतरस्त्वेतमभिप्रायमबुद्ध्वाऽऽह—**अस्त्यन्यदिति** । ब्राह्मी औषधि-

उ०— **ब्राह्मोऽजातौ । ब्राह्मो नारद इति** । क्रमेण तस्यापत्यं तस्येदं साऽस्य देवतेत्यण् । **एतच्चेति** । उक्तं रूपजातं विधिपक्षे नियमपक्षे च यथेष्टं न सिध्यतीति भावः । अपत्य इत्यस्यानुवृत्तौ नियमार्थत्वमुपपादयति—**ब्रह्मणोऽपत्यमिति** । नियमपक्षे दोषं स्फोरयति—**अनपत्ये त्विति** । अनन्तरापत्ये जातित्वाभावादजाताविति विशेषणमपत्यस्य युज्यते । तन्निवृत्तौ किमिदमपत्ये नियमार्थमुतानपत्ये विध्यर्थमिति विशये विधिरेव युक्त इत्याह—**अनपत्य इति** । अत्र पक्षे प्राप्तस्य प्रतिषेधो वक्तव्य इति भाष्योक्तं दोषं स्फोरयितुं स्वयं दोषान्तरमप्याह—**ब्राह्मीति । वक्ष्यमाण इति** । नात्रापत्य इत्यादिना वक्ष्यमाणं योग-

× ६. ४. १७०. ÷ ६. ४. १७०; १४४.

१ क. ख. °यः । न त्वपत्य इत्यनेन । इ° ।

रिति । न वा अत्रेष्यते । अनिष्टं च प्राप्नोतीष्टं च न सिध्यति । एवं तर्ह्यनुवर्तते ऽपत्य इति न त्वपत्य इत्यनेन निपातनमभिसंबध्यते । ब्राह्म इति निपात्यतेऽपत्येऽजाताविति । किं तर्हि । प्रतिषेधोऽभिसंबध्यते । ब्राह्म इति निपात्यतेऽपत्ये जातौ नेति ।

## कार्मस्ताच्छील्ये ॥ ६ । ४ । १७२ ॥

किमर्थमिदमुच्यते न नस्तद्धिते [ १४४ ] इत्येव सिद्धम् । न सिध्यति । अनणीति× प्रकृतिभावः प्रसज्येत । अणीत्युच्यते णश्चायम्÷ । एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽण्कृतानि भव-

प्र०— रित्यत्र कृतार्थः पर्युदासो ब्राह्मण इत्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपं न निवर्तयेत् । **न वा अत्रेष्यत इति ।** अजाताविति पर्युदासः । न चानिष्टार्थे शास्त्रप्रक्लृप्तिरिति पर्युदाससामर्थ्याद्ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थः । इतरस्तु लक्षणमुपालब्धुमाह—**अनिष्टं च प्राप्नोतीति** । ब्राह्मणी औषधिरिति प्राप्नोति । अजाताविति पर्युदासात् । इष्टं च न सिध्यति ब्राह्मण इति । **एव तर्हीति ।** योगविभागः क्रियत इति भावः। तत्र ब्राह्म इत्यत्र सामर्थ्यादपत्य इति न संबध्यते । अपत्ये टिलोपस्य सिद्धत्वात् । तेनानपत्ये सर्वत्र जातावजातौ च ब्राह्म इति निपात्यते। अपत्येऽपि ब्राह्मो नारद इत्यत्र परत्वाद्ब्राह्म इत्यनेनैव टिलोपो भवति । **ततोऽजाताविति** । तत्रापत्य इत्यनुवर्तते । तेनायमर्थो भवति—अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति । अजाताविति प्रसज्यप्रतिषेधो भवतिना नञः संबन्धादिति सर्वेष्टसिद्धिः ।

**कार्मस्ताच्छील्ये । किमर्थमिति** । कर्म शीलमस्य च्छत्रादिभ्यो ण इति णे कृते सिद्धष्टिलोप इति भावः । **ताच्छीलिक इति** । एवं च च्छत्रादिभ्योऽणिति लाघवाय कर्तव्यम् । णवचने प्रयोजनाभावात् । प्रज्ञाश्रद्धेति ज्वलितिकसन्तेभ्य इति

उ०—विभागं मनसिकृत्यैतदुक्तमित्यर्थः। **अजाताविति पर्युदास इति** । जातिं वर्जयित्वा ब्राह्म इति टिलोप इति सूत्रार्थः । मनुष्यजातिविशेषे ब्राह्मणशब्दप्रयोगस्येष्टत्वात्तत्रैव पर्युदासः फलतीति तात्पर्यम् । इष्टिमात्रमेतत् । नतु लक्षणेनायमर्थो लभ्यत इति । उत्तरभाष्यार्थमाह—**इतरस्त्विति । ब्राह्मण इतीति** । पूर्वसूत्रेण प्रकृतिभावप्रतिषेधेन टिलोपप्राप्तेरिति भावः । **अनेनैवेति** । नतु नस्तद्धित इत्यनेनेति भावः । इदं वस्तुस्वरूपकथनमात्रम् । **प्रसज्यप्रतिषेधेनेति** । अन्यथाऽपत्य इत्यनुवृत्तस्यानन्वयः स्यात् । अजातावपत्य इत्यर्थे विधेयानिर्देशादिति भावः । तदुक्तं भाष्येऽपत्ये जातौ नेति ।

**कार्मस्ता०** । भाष्येऽण्णन्तादितीकार **इति** । अणो व्यच इति फिञपि फलान्तरं बोध्यम् । अत एवोपक्रमभाष्येऽण्कृतानि भवन्तीति बहुवचनप्रयोग इत्याहुः । **एवं चेति** । ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्छात्रेति सिध्यतीति चिन्त्यमिदमित्यन्ये । अन्यत्र णवचने प्रयोजनमस्तीत्याह—**प्रज्ञेत्यादि** ।

× ६. ४. १६७, ÷ ४. ४. ६२.

न्तीति । किमेतस्य ज्ञापने प्रयोजनम् । चौरी तापसीत्यणन्तादितीकारः सिद्धो भवति× ।

**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ ६।४।१७४॥**

अत्र भ्रौणहत्ये किं निपात्यते । यकारादौ तद्धिते तत्वं निपात्यते ।

**भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ॥ १ ॥**

भ्रौणहत्ये× तत्वनिपातनमनर्थकम् । किं कारणम् । सामान्येन कृतत्वात् । सामान्येनैवात्र तत्वं भविष्यति हनस्तोऽचिण्णलोः [ ७. ३. ३२ ] इति ।

**ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य ॥ २ ॥**

एवं तर्हि ज्ञापयत्याचार्यो न तद्धिते तत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । भ्रौणघ्नः वार्त्रघ्न इत्यत्र तत्वं न भवति ।

**ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ॥ ३ ॥**

ऐक्ष्वाकस्य+ स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम् । ऐक्ष्वाकः ऐक्ष्वाकः ।

**एकश्रुत्या निर्देशात्सिद्धम् ॥ ४ ॥**

एकश्रुतिः स्वरसर्वनाम यथा नपुंसकं लिङ्गसर्वनाम ।

---

प्र०—तदस्यां प्रहरणमिति णवचने ङीबभावः प्रयोजनम् ।

**दाण्डि०** । **यकारादाविति** । भ्रूणघ्नो भाव इति ब्राह्मणादित्वात्ष्यञ् । **ज्ञापकं त्विति** । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्यनपेक्ष्य ज्ञापकमुक्तम् । तदपेक्षायां तत्वस्याप्रसङ्गात् । ननु टिलोपाभावार्थं निपातनं स्यादिति सति प्रयोजने ज्ञापकमनुपपन्नम् । नैष दोषः । उभयोरनित्ययोः परत्वाट्टिलोपं बाधित्वा तत्वं भविष्यति । अनेकप्रयोजनत्वाद्वा निपातनानाम् । अत एव कुत्वप्रतिषेधार्थमपि निपातनम् । **ऐक्ष्वाक इति** । इक्ष्वाकोरपत्यमिति जनपदशब्दादित्यञ् । उकारलोपो निपात्यते । ञित्वादाद्युदात्तत्वम् । इक्ष्वाकुषु जात इत्यणि प्राप्त ओर्देशे ठञिति ठञि प्राप्ते तं परत्वाद्बाधित्वा जनपदतदवध्योश्चावृद्धादपि बहुवचनविषयादिति वुञि प्राप्ते कोपधादित्यण् । तत्रान्तोदात्तत्वम् । तत्र भिन्नस्वरयोरेकस्मिन्निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम् । **एकश्रुतिनिर्देशादिति** । स्वरभेदप्रत्यस्तमयेन निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमित्यर्थः । **यथा नपुंसक-**

---

उ०— **दाण्डिनाय०** । भाष्ये—**सामान्येनेति** । ष्यञि परतो नस्तद्धित इति टिलोपं बाधित्वा परत्वाद्धनस्त इति तत्वं भविष्यतीति भावः । **अनपेक्ष्येति** । वस्तुतः स एवार्थोऽनेन ज्ञाप्यत इति शब्दान्तरेण भाष्य उक्तमिति बोध्यम् । **तत्वस्य** तकारस्य । **अत एवेति** । अनेकप्रयोजनत्वादेवेत्यर्थः । भाष्ये—**एकश्रुतिनिर्देशादिति** । ननु सूत्रे द्वंद्वसत्त्वेन समासान्तोदात्तत्वे तन्निमित्तशेषनिघातेन निर्देशान्नाद्युदात्तस्य नाप्यन्तोदात्तस्य निर्देश इति शङ्कैवायुक्तेति चेन्न । तदीयविग्रहवाक्याभिप्रायेण शङ्कोत्तरयोः सत्त्वात् । एकश्रुतेः स्वरसर्वनामत्वं दर्शयति—**स्वरभेदेति** । **प्रत्यस्तमयस्त्यागः** । यथा तस्यापत्यमित्याद्यावुपगु-

---

×४, ४, ६२; ४. १, १५. + ५, १. १२४, *४. १. १६८; ६ १, १९७; ४. ३.१३२; ३, १, ३

अथ मैत्रेये किं निपात्यते ।

**मैत्रेये ढञि यादिलोपनिपातनम् ॥ ५ ॥**

मैत्रेये ढञि यादिलोपो निपात्यते । इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते । गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते* । द्वितीयेऽध्याये यस्कादिषु लुगर्थं ग्रहणं क्रियते+ । सप्तमेऽध्याय इयादेशार्थम्× । इदं चतुर्थं यादिलोपार्थम् । द्विर्ग्रहणं शक्यमकर्तुम् । बिदादिषु* प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपेन÷ । इयादेशेनैव सिद्धम् । नैवं शक्यम् । इह हि मैत्रेयकः+÷ संघ इति संघाङ्कलक्षणेष्वञ्यञिञामण् [ ४. ३. १२७ ] इत्यण्प्रसज्येत ।

हिरण्मये किं निपात्यते ।

**हिरण्मये यलोपवचनम् ॥ ६ ॥**

हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि ।

अथ हिरण्यये किं निपात्यते** ।

**हिरण्ययस्य च्छन्दसि मलोपवचनात्सिद्धम् ॥ ७ ॥**

हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नो नयतु । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ।

---

**प्र०—मिति** । सामान्यस्थितावाविर्भावतिरोभावस्थितिविशेषाणामन्तर्भावात् । **मैत्रेय इति** । मित्रयोरपत्यमिति गृष्ट्यादिभ्यश्चेति ढञ् । मित्रयु एय इति स्थिते ओर्गुण इति गुणापवादे ढे लोपोऽकद्र्वा इति लोपे प्राप्ते केकयमित्रय्वोरिति यादेरियादेशे प्राप्ते लोपो निपात्यते । तल्लोपस्यासिद्धत्वाद्यस्येति लोपाभावादतो गुण इति पररूपमेकारः । **द्वितीय इति** । मित्रयव इति बहुषु लुगर्थः पाठः । **सप्तम इति** । ढञोऽन्यत्रेयादेशः । मित्रयोरिदं मैत्रेयमिति । **मैत्रेयक इति** । मित्रयूनां संघ इति गोत्रेऽलुगचीति लुकि प्रतिषिद्धे ढञन्ताद्गोत्रचरणाद्वुञिति वुञ् । यदि तु संघाङ्केत्यत्र न मैत्रेयादित्युच्यते तदा त्रीणि ग्रहणानि स्युरितीह निपातनं न कर्तव्यं स्यादिष्टस्य सिद्धत्वात् ।

---

**उ०—प्र**भृतीन् विशेषानभेदेन सर्वनाम प्रतिपादयति तथैकश्रुतिरप्युदात्तादीन् विशेषानिति सर्वस्वरसंग्रहसिद्धिरित्यर्थः । नपुंसकस्य लिङ्गसामान्यत्वमाह—**सामान्यस्थिताविति** । परिणाम इत्यर्थः । आविर्भावतिरोभावप्रागवस्थाऽत्र स्थितिविशेषः । ननु यस्येति लोपाभावे वृद्धिरेचीति स्यादत आह—**अतो गुण इति** । भाष्ये—**नैवार्थो लुकेति** । अञोऽश्चेत्येव सिद्धत्वादिति भावः । **न मैत्रेयादिति** । अणि निषिद्धे वुञ् सिद्ध एवेति भावः । **तदा त्रीणीति** । बिदादिष्वेकम् । इयादेशार्थमपरम् । अणूनिषेधार्थं तृतीयमित्यर्थः । नञा सहात्रापि न्यासे चत्वारि ग्रहणानीति पदलाघवाभावान्नोक्तमिदं भगवतेति सर्वेष्टसिद्धिः ।

---

* ४. १. १३६ + २. ४. ६३. × ७. ३. २. * ४. १ १०४; २. ४ ६४. ÷ २ ४. ६३; ६. ४. १७४ +÷ ४. ३. १२६. ** ६, ४. १७५

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य
चतुर्थे पादे चतुर्थमाह्निकम् । पादश्च समाप्तः ।
॥ षष्ठोऽध्यायः समाप्तः ॥

---

## युवोरनाकौ ॥ ७ । १ । १ ॥

युवोरनाकावित्युच्यते कयोर्युवोरनाकौ भवतः । प्रत्यययोः । कथं पुनरङ्गस्ये-

---

प्र०— इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य चतुर्थे पादे
चतुर्थमाह्निकम् ॥ पादश्चतुर्थोऽध्यायश्च षष्ठः समाप्तः ॥

---

**युवोरनाकौ** । इह युवोरिति समाहारद्वंद्वे युवुन इति प्राप्नोति । इतरेतरयोगे तु युव्वोरिति । तत्र सौत्रत्वान्निर्देशस्य नुममकृत्वोकारलोपं वा कृत्वा निर्देश इति न दोषः । केचित्तु कर्मधारयं व्याचक्षते । अवयवधर्मेण समुदायस्य व्यपदेशात् । यथा समं चूर्णं कृष्णैत इति । एवं युश्चासौ समुदायो युवुलक्षणो वुश्चासाविति । तत्र समुदायस्याङ्गनिमित्तत्वासंभवादवयवयोर्यथासंख्यं कार्यविज्ञानम् । यथा च भाष्यं कयोर्युवोरिति तथेतरेतरयोगे द्वंद्व इति निर्णयः । अतिप्रसङ्गं मत्वा पृच्छति— **कयोरिति** । **प्रत्यययोरिति** । अङ्गाधिकारादङ्गस्य निमित्ते यौ युवू तयोरनाकाविति सूत्रार्थाश्रयणात् । **कथं पुनरिति** । अङ्गाधिकारादङ्गस्यैव कार्यित्वं युक्तमिति भावः । सिद्धान्तवादिना तु वैयधिकरण्येन संबन्धो दर्शयितव्यः । संप्रति

---

उ०— इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य
चतुर्थे पादे चतुर्थमाह्निकं पादश्चाध्यायश्च समाप्तः ॥

---

**युवोरनाकौ** । युवोरिति निर्देशानुपपत्तिमुद्भाव्य परिहरति—**इहेति** । नपुंसकत्वान्नुमः प्राप्तेरिति भावः । **युव्वोरिति** । ओसि यणादेशप्रसङ्गादिति भावः । आद्ये समाधत्ते—**नुममकृत्वेति** । सौत्रत्वादिति भावः । द्वितीय आह—**उकारलोपं वेति** । छान्दसोवर्णलोप इति भावः । **समं चूर्णमिति** । चूर्णं कणसमुदायः । तत्रावयवैसामान्यात्समुदायस्य तथा व्यपदेशः । कृष्णैत इत्यत्रावयवयोः कृष्णैतत्वात्समुदायस्य तथा व्यपदेशः । वर्णो वर्णेनेति समानाधिकरणसमासः । नन्वेवं समुदायस्यानाकौ स्यातामत आह—**तत्रेति** । **यथा चेति** । छान्दसश्च वर्णलोप इति तद्भावः । **अतिप्रसङ्गमिति** । युवाभ्युयुरित्यादौ । **अङ्गस्यैवेति** । युवुशब्दान्तस्याङ्गस्येत्यर्थ इति भावः । यद्यपि सिद्धान्तेऽपि वैयधिकरण्यसंबन्धोऽभिमतस्तथाऽपि शिष्यबुद्धिपरीक्षार्थं तदनाश्रयणेन परिहरतीत्याह—**सिद्धान्तवादिना त्विति** । ननु शास्त्रतोऽत्र विभक्तिरस्त्येवेत्यत आह—**लौकिक**

त्यनुवर्तमाने÷ प्रत्यययोः स्याताम् । युशब्दवुशब्दान्तमताद्विभक्तावङ्गं भवति । यदि युशब्दवुशब्दान्तस्याङ्गस्यानाकौ भवतः सर्वादेशौ प्राप्नुतः× । निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येवं न भविष्यतः। यत्र तर्हि विभक्तिर्नास्ति। नन्दना कारिकेति+ । अत्रापि प्रत्ययलक्षणेन विभक्तिः । यत्र तर्हि प्रत्ययलक्षणं नास्ति । नन्दनप्रियः कारकप्रिय इति* । मा भूतां याऽसौ सामासिकी विभक्तिस्तस्यां याऽसौ समासाद्विभक्तिस्तस्यां भविष्यतः। न वै तस्यां युशब्दवुशब्दान्तमङ्गं भवति । भवेद्यो युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्यातां वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः । अङ्गस्य युवोरनाकौ भवतो यत्रतत्रस्थयोरिति। यत्र तर्हि समासाद्विभक्तिर्नास्ति । नन्दनदधि कारकदधि×। एवं तर्हि ।

न वा परं निमित्तं संज्ञा च प्रत्ययलक्षणेन ।

---

प्र०—तु सामानाधिकरण्येन संबन्धमाश्रित्य समाधीयते । **युशब्दवुशब्दान्तमिति** । कृत्तद्धितान्तत्वाद्युवुशब्दान्तस्य प्रातिपदिकत्वाद्विभक्तावुत्पन्नायां सत्यङ्गत्वे अनाकौ क्रियेते इत्यर्थः । **यत्र तर्हि विभक्तिर्नास्ति नन्दना कारिकेति** । लौकिके प्रयोगेऽत्यन्तमत्र विभक्तेरभावः । अत्राऽऽहुः—विभक्तावुत्पन्नायामनाकयोः कृतयोरकारान्तलक्षणेन टापा भाव्यम् । ततो हल्ङ्याब्भ्यादिलोपेनत्यानुपूर्व्या सिद्धमेतत् । यथा या सेति । ततश्चाग्रन्थोऽयमिति नन्दन कारकेति पाठो युक्तः । नन्द् यु स् इति स्थिते संबुद्धिगुणे कृतेऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृतेऽङ्गत्वाभावादनाकाप्रसङ्गः । **नन्दनप्रिय इति** । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति लुकि कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधादनाकयोरप्रसङ्गः । **भवेदिति** । विशेषणविशेष्यभावे कामचारादङ्गेन युवू विशेष्येते न च तावङ्गान्तौ संभवतः। न च विशेष्येण तदन्तविधिर्भवतीति युवुभ्यां तदन्तविध्यभावाद्यत्र तत्र स्थितयोरङ्गावयवयोर्युवोरनाकौ भवतः । **नन्दनदधीति** । स्वमोर्नपुंसकादिति लुकि नित्यत्वात्कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधादादेशाप्राप्तिः । **न वा परमिति** । नहीह विभक्तिः प्रत्ययान्तरं वा परं निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोनास्तीति न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यायमविषयः । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते। अस्ति च प्रत्ययलक्षणेनाङ्गसंज्ञा । नहि तस्यां विधीयमानायां न लुमताऽङ्गस्येति

---

उ०—इति । **नित्यत्वादिति** । अकृते गुणे ह्रस्वान्तत्वात्कृत एङन्तत्वाल्लोपप्राप्तेरिति भावः । **अन्तरङ्गानपीति** । एतेनान्तरङ्गत्वात्पूर्वमनाकाभ्यां भाव्यमित्यपास्तम् । नन्वङ्गस्य विशेषणत्वात्तदन्तविधिः स्यादत आह—**न च ताविति** । नापि युवुभ्यामित्याह—**न च विशेष्येणेति** । **नित्यत्वादिति** । अन्तरङ्गानपीति

---

÷६. ४. १, × १, १, ५५. + ६, १, ६८. * २, ४, ७१; १, १, ६३. × ७. १. २३; १, १, ६३.

न चेह परं निमित्तमाश्रीयते । अस्मिन्परतो युवोरनाकौ भवत इति । किं तर्हि । अङ्गस्य युवोरनाकौ भवत इति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन । अथवा तयोरेव यदङ्गं तन्निमित्तत्वेनाऽऽश्रयिष्यामः । कथम् । अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते । अङ्गस्य यौ युवू । किंचाङ्गस्य युवू । निमित्तम् । ययोर्युवोरङ्गमित्येतद्भवति । कयोश्चैतद्भवति । प्रत्यययोः ।

युवोरनाकाविति चेद्धातुप्रतिषेधः ॥ १ ॥

---

प्र०–प्रतिषेधः प्रवर्तते । लब्धाङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्तते । न चाङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाभावः । ननु चाङ्गस्येत्यत्राऽऽसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारे वव्रश्चत्यत्रोरदत्त्वस्य परनिमित्तकत्वात्स्थानिवद्भावे सति न संप्रसारणे संप्रसारणमिति वकारस्य संप्रसारणप्रतिषेध उक्तः स इहत्येन न वा परं निमित्तमित्यनेन ग्रन्थेन विरुध्यते । नास्ति विरोधो दर्शनभेदाद्यथोद्देशं संज्ञापरिभाषमिति पक्षमाश्रित्य न वा परं निमित्तमित्याद्युक्तम् । कार्यकालं संज्ञापरिभाषमाश्रित्य वव्रश्चेत्युक्तम् । तत्र हि पक्ष उरदित्यत्राङ्गसंज्ञासूत्रोपस्थानात्संनिहितः प्रत्ययो निमित्तत्वेनाऽऽश्रीयत इति परनिमित्तत्वं भवति । **अथवेति** । भवतु कार्यकालपक्षस्तत्रापि न दोष इति भावः । **निमित्तत्वेनेति** । अनाकादेशविधाने । **संबन्धसामान्ये षष्ठीति** । निमित्तनिमित्तिभावलक्षणश्च संबन्धोऽन्तरङ्गत्वादाश्रीयते प्रत्ययनिमित्तत्वाच्चाङ्गव्यपदेशस्य प्रत्यययोरेव ग्रहणं विज्ञायते । **धातुप्रतिषेध इति** । नन्वधुनै-

---

उ०–न्यायाच्चेत्यपि बोध्यम् । प्रत्ययलक्षणत्वं प्रत्ययनिमित्तकत्वम् । **न चाङ्गसंज्ञेति** । न लुमता तस्मिन्निति वार्तिकरीत्या प्राप्तेः सूत्रेऽप्यङ्गपदं पूर्वोपलक्षणमेवेति चिन्त्यमेतत् । तस्मान्निषेधानित्यत्वादङ्गसंज्ञा भवतीत्येव भाष्याशयः । **विरुध्यत इति** । उरदत्ववदत्स्यापि परनिमित्तत्वादिति भावः । **संनिहित इति** । स च लक्ष्यानुरोधादावृत्त्याऽत्वविशेषणमिति भावः । प्रकृते त्वावृत्त्या निमित्तत्वे न मानमित्येव भाष्याशयो युक्तः । यथोद्देशपक्षे तु सर्वथाऽसंनिधानेनैवेति तत्पक्षेणैव भाष्यं योजितमुपाध्यायैः । कार्यकालपक्ष इति चाऽऽवृत्तेरप्युपलक्षणमिदम् । अन्ये तु यथोद्देशेऽपि संज्ञापरिभाषादेशे कार्याणां गमनमिति क्ङिति चेति सूत्रकैयटोक्तपक्षे संनिधानं दुर्वारमिति भाष्यासंगतिरेव कैयटोक्तव्याख्यान इत्याहुः । परे त्वङ्गसंज्ञायाः परनिमित्तत्वेन तद्वारद्वाऽत्वस्यापि परनिमित्तत्वमिति स्थानिवद्भावप्रवृत्तिरत्वस्य साक्षात्परनिमित्तत्वाभावेऽपि । अत एवाजघ्नं इत्यादावत्त्वसिद्धिरितीदं तच्च सममिति न कश्चिद्भाष्ययोर्विरोधप्रसङ्ग इत्याहुः । ननु युवोरङ्गनिमित्तत्वमित्यङ्गस्य निमित्तत्वोक्तिरयुक्तेत्यत आह—**अनाकेति** । तयोरेव यद्रूपं युवु इति तदङ्गं प्रति निमित्तत्वेनाऽऽश्रयिष्याम इति भाष्यार्थ इति भावः । संबन्धान्तरस्यापि संभवादाह—**अन्तरङ्गत्वादिति** । शब्दयोश्च निमित्तनिमित्तिभावो वा स्थान्यादेशभावो वा । तत्रान्त्यस्यासंभवादाद्यस्यैव ग्रहणमिति भावः । युक्त्यन्तरमाह—**प्रत्यय-**

युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः। युत्वा युतः युतवान् युतिः।

**भुज्य्वादीनां च ॥ २ ॥**

भुज्य्वादीनां च प्रतिषेधो वक्तव्यः। भुज्युः कंयुः शंयुरिति××।

**अनुनासिकपरत्वात्सिद्धम् ॥ ३ ॥**

अनुनासिकपरयोर्युवोर्ग्रहणं न चैतावनुनासिकपरौ। यद्यनुनासिकपरयोर्ग्रहणं नन्दनः कारकः अत्र न प्राप्नुतो न ह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः। अनुनासिकपरत्वादिति नैवं विज्ञायते अनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति। कथं तर्हि। अनुनासिकः परोऽनयोस्ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति। यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति+। तत्र को दोषः।

प्र०—वोक्तं प्रत्यययोर्ग्रहणमिति। सत्यमुक्तं न तु लभ्यते। सामानाधिकरण्येन संबन्धसंभवे वैयधिकरण्यपक्षाश्रयणस्यायुक्तत्वात्। भेदे हि निमित्तनिमित्तिभावो भवति। अभेदे च संभवति कथं भेद आश्रीयते। अथवा भाष्यकारेण पूर्वं स्वातन्त्र्येणोक्तमिदानीं वार्तिकमवतारितमित्यदोषः। **भुज्य्वादीनां चेति**। भुज्य्वादीनां संबन्धिनः प्रत्ययस्येत्यर्थः। सत्यपि वैयधिकरण्येन संबन्धेऽतिप्रसङ्गः। **भुज्युरिति**। भुजिमृङ्भ्यां युक्त्युकौ चेति युक्प्रत्ययः। मृत्युरित्यत्र त्युप्रत्ययो न युरिति मत्वा भाष्यकारेण मृत्युरिति नोदाहृतम्। **कंयुरिति**। कंशंभ्यां बभयुस्तितुतयस इति युस्प्रत्ययः। ननु सित्करणं पदत्वे सति हल्यनुस्वारार्थमिति तत एवाऽऽदेशो न भविष्यति। नैतदस्ति। अवग्रहाय सित्त्वं स्यात्। अहलादावप्यनुस्वारार्थं वा। **नह्येताभ्यामिति**। रञ्जेः क्युन्वुञ्वुन्ष्वुञित्यादीनामेवं प्रसङ्गः। **अनुनासिकः परोऽनयोरिति**। अवयवान्तरापेक्षया लब्धपरव्यपदेशोऽवयव एवानुनासिक आश्रीयते नान्यः। नच भुज्युरित्यादावुकारस्य सानुनासिकत्वं प्रतिज्ञातमिति दोषाभावः। **इत्संज्ञा प्राप्नोतीति**। लोपस्तु

उ०—**निमित्तत्वाश्चेति**। वैयधिकरण्याश्रयणस्यायुक्तत्वमुपपादयति—**भेदे हीति**। भेदस्य हि संबन्धितावच्छेदकयोर्यो विरोधस्तज्ज्ञानसापेक्षज्ञानकत्वादविरोधे संभवति विरोधस्यान्याय्यत्वात्स न न्याय्यः। अत एव निषादस्थपतौ कर्मधारय एवाऽऽश्रीयते। न च कर्मधारये स्वामिवाचकस्थपतिशब्दस्य पूर्वनिपातापत्तिः। राजदन्तादिषु पाठादित्याहुः। **वार्तिकमिति**। तदर्थप्रतिपादकमित्यर्थः। भुज्य्वादीनां प्राप्त्यभावादनर्थकः प्रतिषेधोऽत आह—**संबन्धिन इति**। **सत्यपीति**। यद्यङ्गनिमित्तयुवोरित्यर्थेन युत्वादावदोष इत्युच्यते तथाऽप्ययं दोष इत्यर्थः। **न युरितीति**। एवं च तत्र योरङ्गनिमित्तत्वाभावादप्राप्तेस्तन्नोदाहृतमित्याशयः। अवग्रहेऽवान्तरपदत्वस्य नियामकतायाः सर्वत्रादर्शनादाह—**अहलादावपीति**। नन्दनादावप्रवृत्तावप्यनाकयोरवकाशं दर्शयति—**क्युन्वुञ्वुञिति**। **अवयवान्तरेति**। एवं चोकार एवानुना-

××५. २. १३८. + १. ३. २.

१ क, प्रायेणाद॰।

**तत्र ङीब्नुमोः प्रतिषेधः ॥ ४ ॥**

ङीब्नुमोः प्रतिषेधो वक्तव्यः। नन्दनः कारकः। नन्दना कारिका। उगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः+।

**धात्वन्तस्य च ॥ ५ ॥**

धात्वन्तस्य च प्रतिषेधो वक्तव्यः। दिवु सिवु।

**षिट्टित्करणं तु ज्ञापकमुगित्कार्याभावस्य ॥ ६ ॥**

यदयं युशब्दवुशब्दौ षिट्टितौ करोति शिल्पिनि ष्वुन् [ ३. १. १४५ ] ट्युट्युलौ तुट् चेति* तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति। कथं कृत्वा ज्ञापकम्। षिट्टित्करण एतत्प्रयोजनं षिट्टित इतीकारो यथा स्यात्÷। यदि चात्रोगित्कार्यं स्यात्षिट्टित्करणमनर्थकं स्यात्। पश्यति त्वाचार्यो न युवोरुगित्कार्यं भवतीति ततो युशब्दवुशब्दौ षिट्टितौ करोति।

**न वा षित्करणं ङीष्विधानार्थम् ॥ ७ ॥**

नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्। षित्करणं क्रियते ङीष्विधानार्थम्। षित इति ङीष्यथा स्यात्।

**टित्करणमनुपसर्जनार्थम् ॥ ८ ॥**

टित्करणेऽप्यन्यत्प्रयोजनमस्ति। किम्। अनुपसर्जनाट्टित इतीकारो यथा स्यात्। टितोऽनुपसर्जनाद्भवत्युगित उपसर्जनाच्चानुपसर्जनाच्च। एवं तर्हि।

**विप्रतिषेधात्तु टापो बलीयस्त्वम् ॥ ९ ॥**

विप्रतिषेधात्तु टापो बलीयस्त्वं भविष्यति। टापोऽवकाशः×। खट्वा माला। ङीपोऽवकाशः। गोमती यवमती। इहोभयं प्राप्नोति। नन्दना कारिका। टाब्भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। विप्रतिषेधे परमित्युच्यते+। पूर्वश्च टाप्परो ङीप्। ङीपः परष्टाप्करिष्यते। सूत्रविपर्यासः कृतो भवति। एवं तर्ह्युगितो ङीब्भवतीत्यत्राप्यतष्टाबित्यनुवर्तिष्यते। एवमप्य-

प्र०—भवतु मा वा भूदिति न विचार्यते। कृतेऽप्युकारलोपेऽवशिष्टस्याऽऽदेशविधानेन रूपनिष्पादनात्। दिवु इत्ययमप्यनुनासिकपर इत्यादेशप्रसङ्गः। **न वा षित्करणमिति**। ङीपि सतीकारोऽनुदात्तो भवति ङीषि तूदात्त इति सति प्रयोजने न ज्ञापकं षित्करणम्। **टित्करणमिति**। टिड्ढेत्यत्रानुपसर्जनादिति वर्तते। अत्रोगिल्लक्षणे ङीप्यविशेषेण प्राप्तेऽनुपसर्जनादेव यथा स्यादिति नियमार्थं टित्करणं स्यादित्यज्ञापकमुगित्कार्याभावस्य। **विप्रतिषेधादिति**। पूर्वविप्रतिषेधोऽत्र विवक्षितः। **एवं**

उ०—सिक इत्याश्रितमित्यर्थः। **दिवु इतीति**। उदितो वेतीड्विकल्पार्थं हि तत्रोकारोऽनुनासिकः।

+ ४. १. ६; ७. १. ७०. * ४. ३. २३. ÷ ४. १. ४१; १५. × ४. १. ४. + १. ४. २.

कारान्तादुगित इहैव स्यात्। नन्दना कारिका गोमती यवमतीत्यत्र न स्यात्। एवं तर्हि संबन्धानुवृत्तिः करिष्यते। अजाद्यतष्टाप् [ ४. १. ४ ] ऋन्नेभ्यो ङीप् [ ५ ] अतष्टाप्। उगितश्च [ ६ ] ङीब्भवति अतष्टाप्। वनो र च [ ७ ] वनो ङीब्भवति उगितोऽतष्टाप्। पादोऽन्यतरस्याम् [ ८ ] ङीब्भवति उगितोऽतष्टाप्। तत ऋचि*। ऋचि च टाब्भवति। उगितोऽत इति निवृत्तम्। तत्रायमप्यर्थो द्विष्टाब्ग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। सिध्यत्येवं यत्त्विदं वार्तिककारः पठति विप्रतिषेधात्तु टापो बलीयस्त्वमित्येतदसंगृहीतं भवति। एतच्च संगृहीतं भवति। कथम्। इष्टवाची परशब्दः+। विप्रतिषेधे परं यदिष्टं तद्भवतीति।

---

प्र०—**तर्हीति**। यदीष्टवाची परशब्दो न गृह्यते तदाऽनुवृत्तिर्वाक्यभेदश्चाऽऽश्रीयत इत्यर्थः। [illegible]। एकवाक्यताश्रयणेन पर्यनुयुङ्क्ते। तत्रादन्तादुगितः पर्यायेण टापृङीपोः प्रसङ्गः। **एवं तर्हि संबन्धानुवृत्तिरिति**। यद्यपि वाक्यभेदेन संबन्धे दोषाभावः। उगितो ङीप् भवति। अदन्तादुगितो टाब्भवतीति। तथाऽपि परिहारान्तरसद्भावप्रतिपादनायेदमुक्तम्। **उगितश्च ङीब्भवतीति**। अतष्टाबित्युत्तरार्थमत्रानुवर्तते। वनो र चेत्यत्रात उगितष्टाबिति वर्तते तत्र वन्नन्तस्यानुगित्त्वाददन्तत्वासंभवाच्च वाक्यभेद आश्रीयते। वन्नन्तस्य ङीब्रौ भवतः, उगितोऽदन्तान्ङीबपवादष्टाबिति। अतष्टाबित्यस्योत्तरत्रोपस्थानाय प्रतिसूत्रमनुवृत्तिं दर्शयति। टाबृचीत्यत्र टाब्ग्रहणं न कर्तव्यं भवतीति टाप उत्तरत्रानुवृत्तिरुपयुज्यते। टापः स्वातन्त्र्यनिराकरणायात उगित इत्येताभ्यां संबन्धः। **उगितोऽत इति निवृत्तमिति**। उगित इत्यस्य निवृत्तिराख्यायते। अत इत्येतत्सर्वत्र प्रकरणेऽनुवर्तते शितिर्ब्राह्मणीति ङीब्नकारौ मा भूता-

---

उ०—ङीपृङीषोर्विशेषं दर्शयति—**ङीपीति**। **वाक्यभेद इति**। उगितो ङीप्। अदन्तादुगितष्टाबित्यर्थ इति भावः। वाक्यभेदे प्रमाणमुगितश्चेति सूत्रमेवेति बोध्यम्। **उत्तरार्थमत्रानुवर्तत इति**। इह तु न फलम्। न चोगितोऽदन्ताट्टाब्विधानं फलम्। उगित इत्यस्य ङीपा सह संबद्धतया पूर्वकृत्लक्षप्रवृत्तेरत इत्यस्य सत्त्वेन चोगित इत्यस्य तद्वाक्येऽसंबन्धेन तस्य फलस्य वक्तमशक्यत्वमिति भावः। नन्वेवं वनो र चेत्यनेनैकवाक्यतयैव संबन्धः स्यादत आह—**तत्रेति**। **अदन्तत्वासंभवाच्चेति** यज्वभ्यामित्यादावपि बहिरङ्गविभक्तिनिमित्तनलोपस्यासिद्धत्वात्संनिपातपरिभाषया टापोऽप्राप्तेश्चेति भावः। नन्वेवमपि पादोऽन्यतरस्यामित्यादावनुवृत्तिप्रदर्शनं व्यर्थमत आह—**अतष्टाबिति**। अतोऽनन्तरमित्यर्थः। उत्तरत्रोपस्थितेः फलं दर्शयति—**टाबृचीति**। नन्वेवमपि टाप एव सा दर्शयताम्। अत उगित इत्यनयोस्तत्प्रदर्शनं व्यर्थमत आह—**टापः स्वातन्त्र्येति**। पादोऽन्यतरस्यामित्यत्रेति शेषः। अत

---

* ४. १. ९. + १. ४. २.

**धात्वन्तस्य चार्थवद्ग्रहणात् ॥ १० ॥**

अर्थवतोर्युवोर्ग्रहणं न च धात्वन्तोऽर्थवान् ।

**नुम्विधौ झल्ग्रहणम् ॥ ११ ॥**

नुम्विधौ× झल्ग्रहणं कर्तव्यम् । झलन्तस्योगित इष्यते । उगिदचां सर्वनामस्थानेऽधातोर्झल इति । तच्चावश्यं कर्तव्यम् ।

**लिङ्गविशिष्टप्रतिषेधार्थम् ॥ १२ ॥**

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात् ।

**न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ १३ ॥**

न वा वक्तव्यम् । किं कारणम् । विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेष एषा वा परिभाषा क्रियेत झल्ग्रहणं वेति । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ।

**प्रयोजनं शुनः स्वरे ॥ १४ ॥**

यथेह भवति* शुना शुन एवं शुन्या शुन्या+ इत्यत्रापि स्यात् ।

**यूनः संप्रसारणे ॥ १५ ॥**

---

प्र०–मिति । कृकवाकुरित्यत्र जातिलक्षणो ङीष् मा भूदित्येवमर्थम् । **धात्वन्तस्य चार्थवद्ग्रहणादिति** । वर्णसमुदायग्रहणमित्यर्थवद्ग्रहणपरिभाषोपतिष्ठते । प्रत्ययाप्रत्ययोः प्रत्यये संप्रत्यय इत्ययमप्यत्र परिहारः संभवति । एवं गोमतीति । ईकारात्परो नुम्प्राप्तोऽझलन्तत्वान्न भवति । एवं नन्दनः कारक इत्यत्राझलन्तत्वान्नुमभावः । **न वा विभक्ताविति** । विभक्तौ यत्कार्यं विधीयते लिङ्गविशिष्टस्य तन्न भवतीत्यर्थः । **शुनेति** । सावेकाच इति प्राप्तं विभक्तेरुदात्तत्वं न गोश्वन्निति प्रतिषिध्यते । **शुन्येति** । गौरादित्वान्ङीषि कृत उदात्तयणो हल्पूर्वादित्यस्य विभक्तिस्वरस्य प्रतिषेधप्रसङ्गः । ननु विभक्तेरेतत्कार्यं न तु विभक्तौ परतः पूर्वस्येति कथं लिङ्गविशिष्टपरिभाषायाः प्रतिषेधः । नैष दोषः । विभक्तेर्यत्कार्यं यच्च विभक्तौ कार्यमिति सर्वत्र प्रतिषेध-

---

उ०–इत्येतादिति :समुदायस्यैव निवृत्तिः कथ्यते । एकदेशस्त्वनुवर्तत एवेति भावः । **वर्णसमुदायेति** । उकारविशिष्टयोर्ग्रहणादिति भावः । **इत्ययमपीति** । अस्याः परिभाषाया असाधारणप्रयोजनस्य भाष्येऽदर्शनादियं निष्फलेति केचित् । भाष्ये नुमापत्तिदोषं परिहरति– **नुम्विधाविति** । **नैष दोष इति** । विभक्ताविति विषयसप्तमीति भावः । नन्वस्य दोषस्यान

---

× ७. १, ७०. * ६. १. १८२. + ४, १, ४१; ३. १. ३; ६. १. १७४.

यूनः संप्रसारणे प्रयोजनम्। यथेह भवति+ यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यात्।

**उगिदचां नुम्विधौ ॥ १६ ॥**

उगिदचां नुम्विधौ प्रयोजनम्। यथेह भवति* गोमान् यवमानित्येवं गोमती यवमतीत्यत्रापि स्यात्।

**अनडुहश्चाऽऽम्विधौ ॥ १७ ॥**

अनडुहश्चाऽऽम्विधौ प्रयोजनम्। यथेह भवति÷अनड्वानित्येवमनडुहीत्यत्रापि स्यात्। न वा भवत्यनड्वाहीति। भवत्यन्येन यत्नेन। आमनडुहः स्त्रियां वेति×। लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति।

**पथिमथोरात्त्वे ॥ १८ ॥**

पथिमथोरात्त्वे प्रयोजनम्। यथेह भवति+ पन्था मन्था एवं पथी मथीत्यत्रापि प्राप्नोति। न केवलः पथिशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते। सुपथीति+×।

**पुंसोऽसुङ्विधौ ॥ १९ ॥**

पुंसोऽसुङ्विधौ प्रयोजनम्। यथेह भवति×÷ पुमानेवं पुंसीत्यत्रापि स्यात्। न केवलः पुंशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते। सुपुंसीति।

**सख्युर्णित्त्वानङौ ॥ २० ॥**

प्र०—प्रवृत्तिः। **एवं युवतीरिति**। एवमर्थमन इत्युभयोः शेष इति नाऽऽश्रयितव्यं भवति। **पथीति**। समासैकदेश उदाहृतः। इतर एतावदेवोदाहृतमिति मत्वाऽऽह—**न केवल इति**। **सुपथीति**। शोभनः पन्था अस्यामिति बहुव्रीहिः। न पूजनादिति समासान्तप्रतिषेधः। ऋन्नेभ्यो ङीबिति ङीप्। भस्य टेर्लोप इति टिलोपः। सुपुंसीति। शोभनः पुमांसोऽस्यामिति बहुव्रीहिः। उरःप्रभृतिषु पुमानिति विभक्त्यन्तपाठस्य प्रयोजनमुक्तम्—एकवचनान्तस्यैव नित्यः कब् यथा स्यादिति। तेनात्र शेषाद्विभाषेति विकल्पो भवति। पातेर्डुम्सु-

उ०—इत्यपकर्षेण परिहृतत्वात्कथमेतत्प्रयोजनमत आह—**एवमर्थमिति**। साधुत्वान्वाख्यानप्रवृत्तस्य भगवतोऽसाधुशब्दोच्चारणमनुचितमत आह—**समासैकदेश इति**। भाष्ये—**उपसमस्त इति**। समस्तपर्यायोऽयम्। आचारक्विबन्तात्कर्तृस्त्रियां क्विबनभिधानेति भावः। आचारक्विबेव नेत्यन्ये। ननु ऋक्पूरिति समासान्ते सति टापि सुपथेति भाव्यमत आह—**न पूजनादिति**। वस्तुतः षचः प्राचीनेष्वेव स इति सिद्धान्तादिनः स्त्रियामिति कपो दुर्वारत्वादिदं चिन्त्यम्। समासान्तविधेरनित्यत्वात्तदभाव इत्युचितम्। **पातेर्डुमिति**। सूतेः सपूप्रसवे पुमानिति स्त्रियामिति सूत्रस्थभाष्यात्सूतेर्म्सुन् सस्य पो ह्रस्वश्चेति वक्तुमुचितम्।

+ ६. ४. १३३. * ७. १. ७०. ÷ ७. १. ९८. × ७. १. ९८. + ७. १. ८५. +× ५. ४. ६९; ४. १. ५; ७. १. ८८. ×÷ ७. १. ८९.

सख्युर्णित्त्वानङो प्रयोजनम् । यथेह भवति+÷ सखा सखायौ सखाय एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति ।

भवद्भगवदघवतामोऽद्भावे ॥ २१ ॥

भवद्भगवदघवतामोऽद्भावे प्रयोजनम् । यथेह भवति** भोः भगोः अघो इत्येवं भवति भगवति अघवतीत्यत्रापि स्यात् ।

एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो झल्ग्रहणेन ।

तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः । उभयं न वक्तव्यम् । उपरिष्टाज्झल्ग्रहणं क्रियते÷ तत्पुरस्तादपकृष्यते । एवमपि सूत्रविपर्यासः कृतो भवति । एवं तर्हि योगविभागः करिष्यते÷ । उगिदचां सर्वनामस्थानेऽधातोः [ ७. १. ७० ] । युजेरसमासे [ ७१ ] । ततो नपुंसकस्य । नपुंसकस्य नुम्भवति । झल इत्युभयोः शेषः । ततोऽचः । अजन्तस्य च नपुंसकलिङ्गस्य नुम्भवति ।

यद्यपि तावदेतदुगित्कार्यं परिहृतमिदमपरं प्राप्नोति । शातनितरा पातनितरा÷÷ । उगितो नद्या घादिषु ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत× नित्यं चेष्यते । उगितो या नद्येवमेतद्विज्ञायते । उगित एषा नदी । उगितो या परा । अत्र चैव दोषो भवत्युगितो ह्येषा परा नद्येषुमतितरायां*× च प्राप्नोति । उगितः परा या विहिता । उगित एषा विहिता । उगित इत्येवं या विहिता । एवमपि भोगवतितरायां÷ दोषो भवति । भोगवतितरा भोगवतीतरा । तस्मादु-

प्र०—ञिति प्रत्ययस्योगित्त्वादुगितश्चेति ङीप् । सखी सख्याविति । सख्यशिश्वीति भाषायामिति ङीष् । अनङ्णित्त्वे अत्र प्राप्नुतः । ङीष्विधानं तु सखीभ्यामित्याद्यर्थं स्यात् । भवद्भगवदिति । यदा संबुद्ध्या भवदादयो विशेष्यन्ते तदा भवत्यादीनामपि प्रसङ्गः । यदा त्ववशब्दो विशेष्यते तदा येन नाव्यवधानमित्येकवर्णव्यवधान ओत्त्वं प्रवर्तते भवत्यादौ तु वर्णद्वयव्यधानादोत्त्वाभावः । तदभावात्तत्संनियोगविहितस्य रुत्वस्याप्यभाव इति केचिदाहुः । नार्थो झल्ग्रहणेनेति । गोमत्याद्यर्थेनेत्यर्थः । पुरस्तादिति । उगिदचां सर्वनामस्थानेऽधातोर्झल इति । ततो युजेरसमासे नपुंसकस्याच इति । अत्र झल इति वर्तते । उभयोः शेष इति । युजेर्झलन्तत्वाव्यभिचारादाद्यन्तावेव योगावपेक्ष्येते । झलिति लुस-

उ०—केचिदाहुरिति । प्रत्ययस्य प्रकृत्यंश उत्थिताकाङ्क्षतया भवदादिविशेषणत्वमेव युक्तमिति । अत्रारुचिः—भाष्ये-एवं भवति भगवतीति पाठः । भाष्ये—योगविभाग इति । योगविभागेऽपि क्रमभङ्गाभावान्न विपर्यास इति भावः । ननु झल इत्यस्य सूत्रत्रयेऽपि संबन्धादुभयोः शेष इत्ययुक्तमत आह—युजेरिति । ननु झल इति करणे सूत्रभेदः स्यादत आह—

+÷ ७. १. ९२; ९३ ** ८. ३. १. ÷ ७. १. ७२. ÷÷ ३. ३. ११७; ४. १. १५. × ६. ३. ४५. *× ५. ३. ५४; ४. ३. १२०; ४. १. १५; ६. ४. १४८. ÷ ४. १. ७३.

गितो या नद्युगितो या विहितेत्येवमेतद्विज्ञास्यते । एवं विज्ञायमाने शातनितरायां दोष एव ।

**सिद्धं तु यवोरनुनासिकत्वात् ॥ २२ ॥**

सिद्धमेतत् । कथम् । यकारवकारयोरेवेदमनुनासिकयोर्ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ।

---

प्र०–षष्ठीकं पदमाश्रीयते । **शातनितरेति ।** शातिपातिभ्यां करणे ल्युटि कृते गौरादिषु शातनपातनेति पाठान्ङीप् । **उगितो या नदीति ।** उगिच्छब्दोच्चारणेनेति भावः । इतरोऽगृहीताभिप्राय आह—**उगित एवेति ।** पूर्वेणैवाभिप्रायेणाऽऽह—**उगितो या परेति ।** उगिच्छब्दव्यापारेण विहितोगितः परेत्यर्थः । इतर आह—**अत्र चैवेति । इष**वोऽस्य सन्तीति **इषुमान्** तस्येदमित्यण् ङीप् । यस्येति लोपे कृत उगितः परा नदीति विकल्पेन ह्रस्वत्वं प्राप्नोति नित्यं चेष्यते । पूर्वोक्तेनाभिप्रायेणाऽऽह—**उगितो या परा विहितेति ।** ऐषुमतितरायां चाणन्तान्नदी विहिता नतूगितः । इतरस्तु शातनितरामाश्रित्याऽऽह—**उगित एवेति । भोगवतीतरेति ।** शार्ङ्गरवादिषु भोगवद्गौरिमतोः संज्ञायामिति पाठान्ङीन्प्रत्ययः । उगित इत्येवं न विहित इति विकल्पेन ह्रस्वत्वं न प्राप्नोति । **उगितस्तु विहित इति ।** विधानाश्रयणे तु विकल्पः सिध्यति शातनितरायां तु विकल्पः प्राप्नोति । **सिद्धं त्विति ।** भाष्यकारीयमिदं वाक्यमित्याहुः । अन्ये त्वनुनासिकपरत्वादिति वाक्यमेवानेन व्याख्यातमित्याहुः । अनुनासिकप्रधानत्वादिति हि तस्यार्थः । अनुनासिकयणौ य्वू इहानुकृतावित्यतिप्रसङ्गाभावः । उकारस्तु निरनुनासिक एवेत्युगित्कार्याभावः ।

---

उ०–**झलितीति । करण इति ।** भावे स्त्रीत्वानुपपत्तिरित्यर्थः । **गौरादिष्विति ।** टित्त्वान्ङीपि सिद्धे गौरादिपाठकल्पने मानं चिन्त्यम् । वस्तुतो ण्यासश्रन्थेति युजर्थः स पाठ आवश्यक इति तत्त्वम् । **इतर आहेति ।** अगृहीताभिप्राय इति शेषः । भाष्ये—**अत्र चैव दोष इति ।** अत्र दोषश्चादैषुमतितरायामपि दोष इति भाष्यार्थः । न चोगितः परेत्यर्थेऽपि पूर्वस्मात्परस्य ह्रस्वे कर्तव्येऽणो लोपस्य स्थानिवत्त्वादैषुमतितरेत्यत्र न दोष इति वाच्यम् । बहिर्भूततरनिमित्तकत्वेन बहिरङ्गह्रस्वस्य स्थानिवत्सूत्रदृष्ट्याऽसिद्धत्वेन पूर्वत्रासिद्धीय इव स्थानिवत्त्वाप्रवृत्तेः । पञ्चमीसमासस्यानित्यत्वाच्च । **विधानाश्रयणे त्विति ।** विधानमेवाऽऽश्रीयते न तु स्वरूपपरत्वमिति भावः । भाष्ये—**सिद्धं तु युवोरिति ।** केचित्तु युशब्द उकार उच्चारणार्थः । वस्तु केवल एव । विभक्त्या चैवोच्चारणे सहायसंपादनात् । प्रत्ययेष्वप्युकार उच्चारणार्थ एव । एवं चाङ्गाधिकारादङ्गसंज्ञानिमित्तयोर्य्वोरादेशविधानादतिप्रसङ्गाभावेन य्वोरनुनासिकत्वप्रतिज्ञाफलं चिन्त्यमिति वदन्ति । तन्न । विधेयविषय उच्चारणार्थानामपीत्संज्ञायास्तस्य लोप इति सूत्र उक्तत्वात् । तस्मादनुनासिकयण्विशिष्टयोर्युवोरिमावादेशाविति भाष्यतात्पर्यम् । **उकारस्त्विति ।** ल्युडादाविति शेषः। यत्र ल्युडादावनाकाविष्येते तेऽनुनासिकयणः पठनीयाः । भुज्युरित्यादयश्च निरनुनासिका इति दोषाभावः ।

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ ७ । १ । २ ॥**

**आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥ १ ॥**

आयनादिषूपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामायनादयो भवन्तीति वक्तव्यम् । किं प्रयोजनम् । स्वरसिद्ध्यर्थम् । उपदेशावस्थायामायनादिष्विष्टः स्वरो यथा स्यादिति । शिलेयम्+× तैत्तिरीयः** । अक्रियमाणे ह्युपदेशिवद्भावे प्रत्ययसंज्ञासंनियोगेनाऽऽद्युदात्तत्वे कृत++ आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः ।

**न वा क्वचिच्चित्करणादुपदेशिवद्वचनानर्थक्यम् ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् । क्वचिच्चित्करणात् । यदयं क्वचिद्घादींश्चितः करोत्यग्राद्यद्घच्छौ च [ ४. ४. ११६; ११७ ] तज्ज्ञापयत्याचार्य उपदेशावस्थायामायनादयो भवन्तीति । कथं कृत्वा ज्ञापकम् । चित्करण एतत्प्रयोजनं चितः [ ६. १. १६३ ] इत्यन्तोदात्तत्वं यथा स्यादिति । यदि चोपदेशावस्थायामायनादयो भवन्ति ततश्चित्करणमर्थवद्भवति ।

---

प्र०— **आयनेयी०** । **आयनादिष्विति** । अङ्गाधिकारे विधानात्प्रकृतिप्रत्ययापेक्षा बहिरङ्गा आयन्नादयः प्रत्ययाद्युदात्तत्वं तु प्रकृतिनिरपेक्षत्वादन्तरङ्गमिति तदेव पूर्वं प्राप्नोतीत्युपदेशिवद्वचनं कर्तव्यम् । **शिलेयमिति** । शिलेव शिलेयम् । शिलाया ढ इति ढः । **तित्तिरिणा प्रोक्तमधीते** । तित्तिरिवरतन्तु इति छण् । **अस्वरकाः स्युरिति** । प्रवृत्तिकालापेक्षयेदमुच्यते । प्रयोगे तु स्वररहितस्याच उच्चारणाभावादनुदात्तं पदमेकवर्जमिति वचनाच्चानिष्टस्वराः प्राप्नुवन्ति । केचित्त्वान्तर्यत इत्यन्यथा व्याचक्षते । यथा—अनुदात्तोच्चारणे गात्राणां स्रंसनं स्वरस्य स्निग्धता कण्ठविवरस्य महत्त्वं च भवति । एवं व्यञ्जनोच्चारणेऽपि । अयोग्यत्वात्त्वनुदात्तधर्मोपजनो व्यञ्जनेषु नास्ति तदेवमस्वरकाणामुदात्तत्वरहितानामस्वरका इष्टोदात्तत्वरहितत्वादनुदात्ता एव स्युरित्यर्थः । **न वेति** । सत्यप्यङ्गाधिकारेऽङ्गत्वमनपेक्ष्य प्रत्ययोत्पत्तिकाल एवाऽऽयन्नादयो भवन्तीति चित्करणेन ज्ञाप्यते । तत्राङ्गानपेक्षत्वाद-

---

उ०— **आयनेयी०** । आयनादिषु झोऽन्त इत्यन्तादेशोऽपि गृह्यत इति धातोरिति सूत्रस्थभाष्यस्वरसः । ठस्येक इत्ययमपि गृह्यत इति कश्चित् । ननु परत्वादाद्युदात्तात्पूर्वमायन्नादयो भविष्यन्तीत्यत आह—**अङ्गाधिकार इति** । **प्रकृतिनिरपेक्षत्वादिति** । प्रत्ययसंनियोगशिष्टत्वादित्यपि बोध्यम् । उपदेशिवद्वचने तु कृतायनादीनामेव फञादीनामाद्युदात्तत्वविशिष्टानां विधानान्न दोषः । अन्यथा शिलेयमित्यादौ व्यञ्जनस्यैवाऽऽदेशादन्तोदात्तत्वं प्राप्नोति मध्योदात्तत्वं चेष्यत इति भावः । ननु स्वररहितस्याच उच्चारणायोगात्कथमस्वरकाः स्युरत आह—**प्रवृत्तिकालेति** । **अनुदात्तधर्मेति** । अनुदात्तत्वरूपधर्मेत्यर्थः ।

---

+× ५. ३. १०२, ** ४, ३, १०२, ++ ३. १. ३.

**तत्रोणादिप्रतिषेधः ॥ ३ ॥**

तत्रोणादीनां प्रतिषेधो वक्तव्यः। शङ्खः शण्ढ इति।

**धातोरीयङ्वचनात् ॥ ४ ॥**

अथवा यदयमृतेरीयङ् [ ३. १. २९ ] इति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायनादयो भवन्तीति। यदि हि स्युर्ऋतेश्छङित्येव ब्रूयात्। सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न चर्तेश्छङा सिध्यति। छङि सति वलादिलक्षण इट् प्रसज्येत*। इटि कृतेऽनादित्वादादेशो न स्यात्। इदमिह संप्रधार्यम्। इट् क्रियतामादेश इति किमत्र कर्तव्यम्। परत्वादिडागमः। नित्य आदेशः। कृतेऽपीटि प्राप्नोत्यकृतेऽपि। अनित्य आदेशो न हि कृत इटि प्राप्नोति। किं कारणम्। अनादित्वात्। अन्तरङ्गस्तर्ह्यादेशः। काऽन्तरङ्गता। इदानीमेव ह्युक्तमायनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति। तदेतदृतेरीयङ्वचनं ज्ञापकमेव न धातुप्रत्ययानामायनादयो भवन्तीति।

**प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ॥ ५ ॥**

---

प्र०—सति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च कृतेष्वायनादिषु प्रत्ययाद्युदात्तत्वं भवतीतीष्टस्वरसिद्धिः। **तत्रोणादिप्रतिषेध इति**। ये त्वनुणादयः खलघञादयस्तेषु खघयोरित्संज्ञया भाव्यं चित्त्वनत्व्यस्य चजोः कुघिण्ण्यतोरिति लिङ्गाच्चादिषु सादकाशे नाऽऽदेशविधानेनेत्संज्ञा न बाध्यते। **नित्य आदेश इति**। उपदेशे यः प्रत्ययादिस्तस्याऽऽदेश इति कृतेऽपीटि प्राप्नोति। **अनादित्वादिति**। सांप्रतिकं प्रत्ययादित्वमाश्रित्याऽऽदेशो विधीयते। **प्रातिपदिकविज्ञानादिति**। पक्षान्तरैरपि परिहाराः संभवन्तीत्यव्युत्पत्तिपक्षाश्रयः।

उ०—**परत्वान्नित्यत्वाच्चेति** इदं चिन्त्यम्। आद्युदात्तत्वविशिष्टानामेव प्रत्ययानां विधानात्। तस्मान्नित्यकरणेन प्रत्ययसंबन्ध्यादेशानामुत्पत्तिसंनियोगशिष्टकार्यादपि पूर्वं प्रवृत्तिर्ज्ञाप्यत इति भाष्यार्थः। प्रत्ययविध्येकवाक्यतया कृतायनादिकानामेव चाऽऽद्युदात्तत्वविशिष्टानां तत्तच्छास्त्रैर्विधानमिति तात्पर्यम्। **न बाध्यत इति**। ततश्चोपदेश एवेत्त्वे लोपे चाऽऽदेशाप्राप्तिरित्युणादीनामित्येवोक्तमिति भावः। इटि कृते प्राप्त्यभावात्कथमादेशानां नित्यत्वमत आह—**उपदेश इति**। इति मन्यत इति शेषः। **सांप्रतिकमिति**। उपदेश इति पदाभावादित्यर्थः। सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादिति भावः। भाष्ये—**ज्ञापकमेवेति**। न च छसुनाविति वाच्ये तरबीयसुनावित्युक्तिः प्रातिपदिकप्रत्ययानामप्यादेशाभावं ज्ञापयेत्। आयनादीनां निर्विषयत्वापत्तेः फघछानां धातुप्रत्ययेष्वभावाद्ढ्फञादीनां चित्त्वस्य ण्यक्षत्रियेत्यादिनिर्देशानां चासंगत्यापत्तेश्चेत्याहुः। भाष्ये—**प्रातिपदिकविज्ञा-**

---

*—७. २. ३५.

